International Journal of Applied Research 2020; 6(8): 356-358




**ISSN Print:** 2394-7500
**ISSN Online:** 2394-5869
**Impact Factor:** 5.2
IJAR 2020; 6(8): 356-358
www.allresearchjournal.com
Received: 16-06-2020
Accepted: 18-07-2020

**डाँ. प्रदीप्त कुमाार: नन्द:**
अध्यापक: श्रीदधिवामनजीउ संस्कृत महाविद्यालय:, केन्द्रापडा, ओडिशा, भारत

**Corresponding Author:**
**डाँ. प्रदीप्त कुमाार: नन्द:**
अध्यापक: श्रीदधिवामनजीउ संस्कृत महाविद्यालय:, केन्द्रापडा, ओडिशा, भारत

# योग: कर्मसु कौशलम्

**डाँ. प्रदीप्त कुमाार: नन्द:**

**प्रस्तावना**

प्रस्तावना-सर्वेषां जीवानां सुखमेव चरमलक्ष्यम् । सुखान्वेषी जीव: सर्वदा परमसुखावाप्तये इतस्ततो भ्रमति। चतुर्वर्गरूपा: धर्मार्थकाममोक्षा: पुरुषार्थभूता: विनिश्चिता: । आत्यन्तिकदु:खनिवृत्तिस्तु केवलं मुक्तौ तिष्ठति । मुक्ति: कदा मोक्ष: कदा कैवल्यं कदापवर्ग: कदा नि:श्रेयसं कदा च निर्वाणनाम्ना व्यवह्रियते ग्रन्थान्तरे । मोक्षश्च निरतिशयसुखं दु:खनिवृते: पराकाष्ठा आत्मसाक्षात्काररूप: । “तमेव विदित्वातिमृत्युमेति नान्य: पन्था विद्यतेऽयनाय [1] ” अमृतत्वं च गच्छति [2] अथ स अभयं यतो भवति [3] इत्यादिभि: मोक्षस्य आनन्दस्वरूपत्वं प्रपञ्चितम् ।

विषयसंक्षेप:-भारतीयदर्शने योगदर्शनस्य स्थानं महत्वपूर्णं भजते । संप्रति कलौ दु:खनाशहेतो: योगो भवति प्रकृष्टो मार्ग: । सुतरां दु:खनाश एवास्य दर्शनस्य अयमारम्भ: प्रतिपाद्यो विषय: । ग्रन्थेन सहास्य प्रतिपाद्य-प्रतिपादकभाव: सम्बन्ध: । कैवल्यलाभोऽस्य प्रयोजनम् । कैवल्यलाभार्थी अस्याधिकारी । इत्यनुबन्धचतुष्टयं निरूप्य योग अग्रेसरति । पतञ्जले: पूर्वं योगस्यास्तित्वं सर्वत्र विद्यमानमासीत् । वेदवेदांगधर्मशास्त्रस्मृतिपुराणोपनिषत्सु अयं योगो बहुश: प्रपञ्चित: । विशाले वेदवाङ्मये सर्वत्र योगचर्चा दरीदृश्यते । “योगे योगे तवस्तरं वाजे वाजे हवामहे [4] ” “कदा योगो वाजिनो रासभस्य [5] ” “योगक्षेमं व आदाया [6] ”इत्यादिषु संयोगार्थक: ”क्वचित् क्षेमपरको योगो वेदे अव्याकृतरूपेण विद्यमानत्वात् अपौरुषेयो वक्तुं शक्यते । युज् समाधौ इत्यस्माद्धातो: घञ् प्रत्ययेन योगशब्द: समाधिपरक: [7] संयोगपरकश्च । हिरण्यगर्भ नामा कश्चित् योगस्यादिवक्ता [8] इति स्मृतिवाक्यात् प्रतीयते । श्रुतिप्रमाणमपि [9] द्रढ़यति तथ्यम् । यथोक्तं- “सांख्यस्य वक्ता कपिल: परमर्षि: स उच्यते । हिरण्यगर्भो योगस्य वक्ता नान्य: पुरातन:”।। (या०स्मृ०-२/३४९/६५) इति । गोरक्षमार्कण्डेयौ योगस्य प्रधानानुष्ठातारौ [10] भगवान्महेश्वर एव योगस्यादि वक्तेति नाथसंप्रदाया: निगदन्ति । शिवात् मत्सेन्द्रनाथ: मत्सेन्द्रात्गोरक्षनाथ इति योगपरंपरा श्रुयते [11]। योगशास्त्रं चिकित्साशास्त्रवत् चतु:व्युहात्मकम् । हेयो हेयहेतु: हानम् हानोपायश्च [12] दु:खप्रचुरसंसारो हेय: । तस्य अविद्यानिमित्त: द्रष्टृदृश्यसंयोगो हेतु: । विवेवख्यातिविप्लवा हानोपाय: । विवेकख्यातौ च सत्यामविद्यानिवृत्ति: । अविद्यान्निवृत्तौ आत्यन्तिको द्रष्टृदृश्यसंयोगपरमो हानम् । तदेव च कैवल्यम् ।

खी०पू०द्वितीयशताब्द्यां सम्भूतोऽयं पतञ्जलि: योगसूत्रस्य व्याकरणमहाभाष्यस्य चरकसंहितानामकवैद्यकशास्त्रस्य च प्रणेता [13] एव। तथाहि “योगेन चित्तस्य पदेन वाचा मलं शरीरस्य च वैद्यकेन । योऽपाकरोत्तं प्रवरं मुवीनां पतञ्जलिं प्राञ्जलिरानतोऽस्मि” ।। रामभद्रविरचिते पतञ्जलिचरिताख्ये काव्ये अस्य जन्मवृत्तान्तमित्थं वर्णितमस्ति । एकदा शेषशायी महाविष्णु: चिदम्बरक्षेत्रे योगनिद्रायां शिवस्य नृत्यं दृष्ट्वा आनन्दोऽभूत् । तदानीं विष्णु: भूलोकं गत्वा भगवन्तं महेश्वरं पाणिनिसूत्रोपरि भाष्यं विरचयितुमादिदेश । महेश्वर: काश्यां गोणिकानाम्नि रमणी हस्ते सर्परूपेण पतित्वा पतञ्जलि: संजात: [14] । पतञ्जलिप्रोक्तं योगशास्त्रं समाधि-साधन-विभूति-कैवल्याख्यपादचतुष्टयात्मकम् । एकपञ्चाशत् (५१)सूत्रसंवलिते आद्ये समाधिपादे “अथ योगानुशासन [15] ”मिति योगशास्त्रारम्भप्रतिज्ञां विधाय “योगचित्तवृर्त्तिर्निरोध: [16] ”इत्यादिना योगलक्षणमभिधाय समाधिं सप्रपञ्चं निरदिशत्भगवान्पतञ्जलि: । पञ्चपञ्चाशत् (५५) सूत्रात्मके द्वितीये साधनपादे व्युत्थितचित्तस्य कृते“तप:स्वाध्यायेश्वरप्रणिधानानि क्रियायोग:” [17] दर्शयन्“यमनियमासनप्राणायामप्रत्याहारादीनि ” [18] षड् बहिरंगानि साधनानि साधितानि । पञ्चपञ्चाशत्तमसूत्रसंवर्धिते (५५) तृतीये“ देशबन्धचित्तस्य धारणा ” [19] इत्यत्र धारणाध्यानसमाधय: त्रीणि अन्तरंगसाधनानि उपदिष्टानि । चतु: त्रिंशत् (३४) सूत्रसंवलितेऽस्मिन् चतुर्थे कैवल्यपादे “जन्मौषधिमन्त्रतप: समाधिजा: सिद्धय: [20] ”इत्यादिना सिद्धिपञ्चकप्रपञ्चनपुर: सरं परमप्रयोजनं कैवल्यं निरूपितम्। प्रधानादीनि पञ्चविंशति सांख्ये निरूपितानि योगे तु“क्लेशकर्मविपाकाशयैरपरामृष्ट: पुरुषविशेष: ईश्वर:” “तस्य वाचक: प्रणव:” (यो०सू०-१/२४,२७) इति षड्विंशतत्वात्मकं कोऽपि परमेशवरो संसाध्यते येन सह अष्टांगयोगसाधनेन योगो भवतीति युजिर् योगार्थपरकोऽपि सिध्यति ।

योगपदार्थनिर्वचनम्- योगशब्दाचरणे सर्वादौ गीताप्रस्थानस्य नाम समायाति । यतो हि अत्र योगशब्दप्रयोगा: दरीदृश्यन्ते । "इमं विवस्वते योगं प्रोक्तवानहमव्ययम्" (भ०गी०-४/१) इति । संजयेनापि-"व्यासप्रसादात् श्रुतवानिमं गुह्यतमं परम् । योगं योगेश्वरात् कृष्णात् साक्षात् कथयत: स्वयम्"।। (तत्र-१८/७५) इति । अपि च भगवन्तं योगेश्वर इत्यभिधानेन तत्र तत्र (११/४,१८/७५,१८/७८) वचनानि संकलितानि । योगिशब्दोपि (१०/१७) तत्र ज्ञानयोगशब्दोऽपि (३।३,१६।१) सांख्ययोगशब्दोऽपि (१३/२४) कर्मयोगशब्दोऽपि (३/३, ७,५/२,१३/२४) ध्यानयोगोऽपि (१८/५२) भक्तियोगशब्दोऽपि (१४/२६) गीतायां इतस्तत: समुपलभ्यन्ते । अपि च प्रत्यध्यायान्ते "इति श्रीमद्भगवद्गीतासु उपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे" इत्यत्र सर्वथा योगशब्द: समानार्थक: प्रतिभाति । योगो ज्ञाननिष्ठापरिपूरक इति शांकरा मन्यन्ते । यदुक्तं भगवता शंकराचार्येण "इमं विवस्वते योग"मिति भाष्यप्रसंगे- "योऽयं योग अध्यायद्वयेनोक्तोज्ञाननिष्ठालक्षण: ससंन्यास कर्मयोगोपायो यस्मिन् वेदार्थ: परिसमाप्त: प्रवृत्तिलक्षणो निवृत्तिलक्षणश्च गीतासु च सर्वासु अयमेव योगो विवक्षितो भगवता [21] " इति योग: परमात्मना युज्यते एकीक्रियतेऽनेन ज्ञाननिष्ठायोग: स्पष्ट: । कर्मयोगादयस्तु तादर्थ्याद् योगशब्दार्हा: भवन्ति । श्रीकृष्णार्जुनसंवादप्रतिपादको गीताग्रन्थोऽपि च तथैव योगशब्द: शब्दित: [22] योगो नाम भगवत: ऐश्वर्यम् [23] विभूतिपरकम् । उक्तं च -"एतां विभूतिं योगं च मम यो वेत्ति तत्त्वत: । सोऽविकम्पेन योगेन युज्यते नात्र संशय:" [24] ।। गीतायां योगशक्त्यतिशयो भगवतो घटनं योग इत्युच्यते । कर्मध्यानभक्तियोगा: परमार्थयोगार्थत्वात् योगशब्देन निर्दिश्यन्ते । तथाह भगवान् श्रीकृष्ण:- "संन्यासस्तु महाबाहो दु:खमाप्तुमयोगत:। योगयुक्तो मुनि:ब्रह्म नचिरेणाधिगच्छति [25] "।। अपि च –"सांख्ययोगौ पृथग्बाला: प्रवदन्ति न पण्डिता: । एकमप्यास्थित: सम्यगुभयोर्विन्दते फलम् [26] "।। अत्र सांख्यशब्दवाच्या ज्ञाननिष्ठा-योगशब्दवाच्या कर्मनिष्ठा च वाच्या । उपासका कर्मिण; सर्वे योगिशब्देनोक्ता भगवता । तदेव गीताशास्त्रे योगशब्दस्य ज्ञाननिष्ठायां मुख्यवृत्त्या कर्मध्यानादिषु गौण्या वृत्त्या प्रवृत्तिरिति शांकरीया मन्यन्ते । "न हि ज्ञानेन सदृशं पवित्रमिह विद्यते । तत् स्वयं योगसंसिद्ध: कालेनात्मनि विन्दति [27] "।। इति योगमात्रस्य ज्ञानकारणत्वमुपपन्नम् । यच्चोक्तं भगवता- "तज्ज्ञानं स्वयमेव योगसंसिद्ध: योगेन कर्मयोगेन समाधियोगेन च संसिद्ध: संस्कृत: योग्यताम् आपन्न: सन् मुमुक्षु: कालेन महता आत्मनि विन्दति लभत [28] इत्यर्थ:" । सांख्यप्रवचनाख्येऽस्मिन् पातञ्जले योगशास्त्रे वर्तमानदु:खस्य भाविदु:खस्य च कृते तन्निनिवृत्यर्थं द्विविधा प्रवृत्तिर्जायते । विशेषस्तु हेयं दु:खमनागतमिति साधु सूत्रित: । अत्र योगसिद्धये न ज्ञाननिष्ठाया अपितु कर्मनिष्ठाया: प्रयोजनमुक्तम् । तथाहि योगरसायने- "क्रियाजालान्यनेकानि प्रभवन्ति न मुक्तये । योगमेवाभ्यसेन्नित्यं बुधो मोक्षाय केवलम् [29] "।। इति । अपि योगमार्गप्रकाशिकायां- "ज्ञानादृते न मुक्ति: स्यात् तद्योगेन विना नहि । स च योग: पुरा प्रोक्तो ह्यभासादेव सिध्यति [30] " ।। पुन: भगवता श्रीकृष्णेन- "तपस्विभ्योऽधिको योगी ज्ञानिभ्योऽपि मतोऽधिक: । कर्मिभ्यश्चाधिको योगी तस्मात् योगी भवार्जुन: [31] " ।। इत्यत्र योगस्य सर्वश्रेष्ठता उक्ता । अत्र योगो नाम तत्त्वदर्शनाभ्युपाय: इति विवरणकारा: शंकराचार्या: । तन्नये बहुलं हि योगशास्त्राणां वेदेन सह संवादो दृश्यते । उपनिषदुपायस्य च तत्त्वज्ञानस्य योगापेक्षा वर्तते । तस्मात् अष्टकादि स्मृतिवद् योगस्मृति: प्रमाणम् [32] व्यासमतानुसारं सश्च योग: सार्वभौम: चित्तस्य धर्म: [33] इति निरूपित: ।

योगविभाग:-योगशास्त्रे योगश्चतुर्धा विभक्त: । यदुक्तं योगतत्त्वोपनिषदि"योगो हि बहुधा ब्रह्मन् भिद्यते वयवहारत: । मन्त्रयोगो लयश्चैव हठोऽसौ राजयोगक: [34]" ।। अपि च योगशिखायां- "कथितं तु तव प्रीत्या ह्येतदभ्यासलक्षणम् । मन्त्रो लयो हठो राजयोगोऽन्यर्भूमिका: क्रमात् "।। एक एव चतुर्धाऽयं महायोगोऽभिधीयते [35] । शिवयोगदीपिकायां –"शिवयोगं परं गुह्यमपि तद्भक्तिगौरवात् । मन्त्रो लयो हठो राजा चेति योगाश्चतुर्विधा:" [36]।। इति भक्तिसाहचर्याश्रितो योग: क्षिप्तादिपञ्च चित्तवृत्तिनां निरोधरूप: [37] समाधिरिति [38] भाष्यकार: समाधानमिति [39] पदचन्द्रिकाकार: युक्तिरिति [40] वृत्तिकाराश्च निगदन्ति । हठयोगप्रदीपिकायां अमनस्कयोगेन जीवन्मुक्तिरुच्यते। तथाहि- "राजयोग: समाधिश्च उन्मनी च मनोन्मनी । अमरत्वं लयतत्त्वं शून्याशून्यं परं पदम् ।। अमनस्कं तथाऽद्वैतं निरालम्बं निरञ्जनम् । जीवन्मुक्तिश्च सहजा तुर्या चेत्येकवाचका: [41] ।। " योगस्तावत् निरालम्बं स्थानमद्वैतं वा प्रतिकूलयति । योगतत्त्वोपनिषदि योगशिखोपनिषदि वराहोपनिषदि च चतुर्विधयोगानां के अधिकारिणस्तेषां वर्णनं विद्यते । कादाचित् योगसूत्रटीकायां भक्तियोगस्य पराकाष्ठां प्रमाणयितुं बहुल: प्रयासो विहित: । नारायणतीर्थस्य योगसिद्धान्तचन्द्रिकायां राजयोग: बहुपर्यायेण विभक्त आसीत् । उक्तं च- "निदिध्यासनं च एकतानतादिरूपो राजयोगापरपर्याय: समाधि: । तत्साधनं तु क्रियायोग: चर्यायोग: कर्मयोग: हठयोग: मन्त्रयोग: ज्ञानयोग: अद्वैतयोग: लक्ष्ययोग: ब्रह्मयोग: शिवयोग: सिद्धियोग: वासनायोग: लययोग: ध्यानयोग: प्रेमभक्तियोगश्च भेदात् भिद्यते" [42] । अष्टांगयुक्तं पातञ्जलशास्त्रं राजयोगविशिष्टम् । राजयोगं विना योगसिद्धि: न सम्भवति । यम-नियमं विहाय हठयोगेन ईश्वरसाक्षात्कारो दुर्लभ: । तस्मात्- "सर्वे हठलयोपाया: राजयोगस्य सिद्धये । राजयोगसमारूढ़: पुरुष: कालवञ्चक: ।। राजयोगं विना पृथ्वी राजयोगं विना निशा । रागयोगं विना मुद्रा विचित्रापि न शोभते [43] "।। इति राजयोगस्य सर्वश्रेष्ठता प्रमाणिता । मण्डलब्राह्मणे राजयोगस्य [44] तेजोविन्दूपनिषदि अष्टांगयोगस्य [45] अमृतनानोपनिषदि षडंगयोगस्य [46] इत्यादिषु बहुषु उपनिषत्सु वेदान्तप्रतिपाद्यज्ञानयोगापरपर्यायभूतस्य योगस्य वर्णनं विहितम् । इदं दुरुहं दुर्बोधं च योगशास्त्रं कलौ सर्वेष्टफलदायकम् सर्वकल्याणकरमिति नि:सन्देहमेव । योगसाधनप्रणाली गुरुमुखग्राही । योगद्वारा सर्वसिद्धिर्भवति । योगाभ्यासे कृते मानव: सर्वज्ञो दीर्घजीवी नीरोगी च भवति । अनाहारेणापि कियत्कालं जीवेत् । श्वासरोधेऽपि न म्रियेत । उपुयुक्तगुरुं विना न योग: साध्यते । गुरुरभावे यौगिकप्रक्रियाणां साधनं तु विपज्जनकम् । संप्रति केचन अर्वाचीना: योगप्रशिक्षका: योगं शिक्षयन्ति । विषाणुबहुले संसारे योगोक्त-आसनानि प्राणायामादीनि अवश्यं शरीरस्थं दुरारोग्यव्याधिं विनाशयितुं समर्थानीति सत्यम् । किन्तु प्राणायामादिसाधनानि कादाचित्प्राणघातकानि भवन्ति, अनुपयुक्ताभ्यासात् । यथा ह घेरण्डेन- "प्राणायामेन सिद्धेन सर्वव्याधिक्षयो भवेत्। अयुक्ताभ्यासयोगेन सर्वव्याधिसमुद्भव: ।। हिक्का श्वासश्च काशश्च शिरकर्णाक्षिवेदनम् । भवन्ति विविधा रोगा: पवनस्य व्यतिक्रमात् [47] " ।। इतीदं योगशास्त्रं परमकल्याणकारकं मोक्षमार्गसहायकमिति सत्यम् । योगानुष्ठानद्वारा चित्तगतदोषा नश्यन्ति । तत: कैवल्यं विन्दति मानव: । सुतरां सर्वेषु आध्यात्मिक-कर्मसु योग: कौशलकर इत्यलं विस्तरेण ।

**पादटीप्पण्य:**

1. पुरुषसूक्तम्-
2. का०उ०-६/८
3. तै०उ०-२/७/१
4. ऋ०सं०-१/३०/७
5. तत्र-१/३४/९
6. तत्र-१०/१६६/५
7. यो०सू०व्या०भा०
8. महा०भा०-१२/५४८/६५
9. ऋ०सं०-१०/१२१/१
10. सां०त०वारिधि:-पृ-२०६
11. नाथपरंपरा सि०सि०पद्धति भूमिका
12. विवरणे
13. यो०सू०वि०भा० भूमिका

14. पतञ्जलिचरिते
15. यो०सू०-१/१
16. यो०सू०-१/२
17. यो०सू०-२/१
18. यो०सू० २/२९
19. यो०सू०-३/१
20. यो०सू०-४/१
21. गी०शा०भा०
22. गी०शा० विवेक: पृ-२०
23. गीता-९/५
24. गी०१०/१८
25. तत्र-५/६
26. तत्र-५/७
27. तत्र-४/३८
28. गी०शा०भा०
29. यो०रसायनम्-४
30. यो०मा०प्रकाशिका-५
31. गी०-६/४६
32. यो०सू०वि०भा०पृ-२१
33. यो०सू०व्या०भा०
34. यो०त०उ०-१९
35. यो०शि०उ०-१३०
36. शि०यो०प्रदीपिका-४
37. यो०सू०-१/२
38. यो०सू०व्या०भा
39. यो०सू०पदचन्द्रिका
40. यो०सू०भो०वृत्ति:
41. हठ०यो०प्रदीपिका-३-४
42. यो०सि०चन्द्रिका पृ-२
43. हठ०यो०प्र०-३/१०६
44. म०ब्राह्मण०उ०-१
45. ते०वि०उ०-१६
46. अ०ना०उ०-६
47. घे०संहिता

**सहायकग्रन्था:**

1. ऋक् संहिता
2. यजु:संहिता
3. महाभारतम्
4. अथर्वसंहिता
5. कठोपनिषत्
6. श्वे०श्वे०उपनिषत्
7. अद्वयतारकोपनिषत्
8. अमृतनादोपनिषत्
9. अमृतविन्दूपनिषत्
10. तेजोविन्दूपनिषत्
11. श्रीमद्भगवद्गीता
12. श्रीमद्भागवतम्
13. सांख्यतत्ववारिधि:
14. पतञ्जलिचरितम्
15. सिद्धसिद्धान्तपद्धति:
16. गीता०शा०भाष्यम्
17. योगरसायनम्
18. योगमार्गप्रकाशिका
19. योगसूत्रविवरणभाष्यम्
20. गीताशास्त्रार्थविवेक:
21. योगतत्वोपनिषत्
22. शिवयोगदीपिका
23. हठयोगप्रदीपिका
24. घेरण्ड़संहिता
25. योगसिद्धान्तचन्द्रिका
26. योगसूत्रभोजवृत्ति:
27. योगसूत्रपदचन्द्रिका
28. योगसूत्रव्यासभाष्यम्
29. तै०उपनिषत्
30. सर्वदर्शनसंग्रह:
31. योगवाशिष्ठरामायणम्
32. योगवार्तिकम्
33. ईशादि-अष्टोत्तरोपनिषत्
34. योगशिखोपनिषत्
35. मण्ड़लब्राह्मणोपनिषत्